श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

# ॥ श्री-अष्टभुजाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# ॥ श्री-अष्टभुजाष्टकम् ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

गजेन्द्र रक्षा त्वरितं भवन्तं
ग्राहैरिवाहं विषयैर्विकृष्टः।
अपार विज्ञान दयानुभावम्
आप्तं सतामष्टभुजं प्रपद्ये॥ १॥

त्वदेक शेषोऽहमनात्म तन्त्रः
त्वत्पाद लिप्सां दिशता त्वयैव।
असत्समोऽप्यष्टभुजास्पदेश
सत्तां इदानीं उपलम्भितोऽस्मि॥ २॥

स्वरूप रूपास्त्र विभूषणाद्यैः
परत्व चिन्तां त्वयि दुर्निवाराम्।
भोगे मृदूपक्रमतामभीप्सन्
शीलादिभिर्वारयसीव पुंसाम्॥ ३॥

शक्तिं शरण्यान्तर शब्द भाजां
सारं च सन्तोल्य फलान्तराणाम्।
त्वद्दास्य हेतोस्त्वयि निर्विशङ्कं
न्यस्तात्मनां नाथ बिभर्षि भारम्॥ ४॥

अभीति हेतो रनुवर्तनीयं
नाथ त्वदन्यं न विभावयामि।
भयं कुतः स्यात् त्वयि सानुकम्पे
रक्षा कुतः स्यात् त्वयि जात रोषे॥ ५॥

त्वदेक तन्त्रं कमलासहाय
    स्वेनैव मां रक्षितुं अर्हसि त्वम्।
त्वयि प्रवृत्ते मम किं प्रयासैः
    त्वय्यप्रवृत्ते मम किं प्रयासैः॥ ६॥

समाधि भङ्गेष्वपि संपतत्सु
    शरण्य भूते त्वयि बद्ध कक्ष्ये।
अपत्रपे सोढुं अकिञ्चनोऽहं
    दूराधिरोहं पतनं च नाथ॥ ७॥

प्राप्ताभिलाषं त्वदनुग्रहान्मां
    पद्मा निषेव्ये तव पाद पद्मे।
आदेहपातात् अपराध दूरम्
    आत्मान्त कैङ्कर्य रसं विधेयाः॥ ८॥

प्रपन्न जन पाथेयं प्रपित्सूनां रसायनम्।
श्रेयसे जगतामेतत् श्रीमदष्टभुजाष्टकम्॥ ९॥

शरणागत सन्त्राण त्वरा द्विगुण बाहुना।
हरिणा वेङ्कटेशीया स्तुतिः स्वीक्रियतामियम्॥ १०॥

॥ इति श्री-अष्टभुजाष्टकं समाप्तम्॥

कवितार्किकसिंहाय कल्याणगुणशालिने।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः॥